यदि श्रीरामभद्रमें आग्रहसहित बहुपत्नित्वकी कल्पना की जायगी तो एकपत्नीव्रत धीरोदात्त अनुकूल नायकका एक सर्वोत्तम उदाहरणाही आकाशपुष्पवत् होजायगा ; एकपत्नीव्रतत्वमें सब समर्थ नहीं हैं । यह किसी जितेन्द्रियही का कार्य है । एकपत्नीव्रत नायक प्रेमव्रत और धर्म्मव्रत हैं। उसकी धन्या भार्या सम्पूर्ण पति-प्रेमकी भागिनी होती है। वह नायकत्वका उत्कृष्ट पदहै, जिसमें श्रेष्ठ वृत्त-शील के सौन्दर्य का विकाश होता है । वहीं शृङ्गार-रस अपने शुद्ध स्वरूपमें रहता है । उस एकपत्नीव्रत-धीरोत्तम-नायकत्वको सब नहीं समझ सकते । भोगासक्त विलासियोंके लिए वह अचिन्तनीय है । अन्धतापसने जो अन्त-समय अपने पुत्र श्रवणकुमारको आशीर्वाद दिया है उसमें भी एकपत्नीव्रतका माहात्म्य प्रकाशित है, यथा—"जो गति सब जीवोंको स्वाध्याय और तपस्यादिसे प्राप्त होती है (वह तुम्हें प्राप्त हो) ।'

राजर्षि भर्तृहरिने भी कहा है—

चाहिय एकै इष्टदेव रघुवर कै शङ्कर ।
तैसहि एकै मित्र नृपति हो अथवा यतिवर ॥
एकहि हो आवास नगरवर कै बनबीहर ।
एकहि सुन्दर नारि होय किम्वा गिरिकन्दर ॥

श्रीरामभद्रकी एक भार्या श्रीजनकनन्दिनीही हैं, यह निश्चित है। दासियां और सखियां अनेक हैं, जो उनके निदेश से श्रीरामभद्रकी परिचर्य्या करती हैं । यही सिद्धान्त है ॥ २१

चं०—"रुमां मां कपिराज्यंच धनधान्य-पशूनि च। रामप्रियार्थं सुग्रीवस्त्यजेदितिमतिर्मम" इति तारोक्तेः। "त्वयि किञ्चित्समापन्ने किंकार्यं मम सीतया" इति। "धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण। इच्छामि भवतामर्थे एतत्प्रति शृणोमिते॥ यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद। भवेन्ममसुखं किञ्चिद्भस्म तत्कुरुतां शिखीति" ॥२२॥

ज्यो०—ताराका वचन है कि—'सुग्रीवजी श्रीरामचन्द्रजीके प्रियके निमित्त रूमाको, हमको, वानरोंके राज्यको, तथा धन-धान्य-पशु इत्यादिको छोड़ देंगे, यह मेरी धारणा है।' तथा श्रीरघुनाथजीने सुग्रीवसे कहा है कि—'तुमको यदि कुछ होजाता तो हम जनकनन्दिनीको लेकर क्या करते?" और भी कहा है कि—" हे लक्ष्मणलाल! धर्म, अर्थ, काम और पृथिवी, यह सब तुम्हीं लोगोंके लिये हम चाहते हैं। यह हम सत्य प्रतिज्ञा करते हैं। भरतलालके विना, तुम्हारे विना तथा शत्रुघ्नलालके विना हमको जो कुछ सुख हो वह अग्नि जलादे" अर्थात् उस सुखसे कुछ प्रयोजन नहीं॥ २२॥

चं०—एवञ्च सख्युस्त्री सखीति सङ्गच्छताम् "रशनांचापि सा सीतादातुमिच्छति ते सखी"

इति सुयज्ञं गुरुपुत्रं प्रति तथैव श्रीरघुनन्दनोक्तेश्च। "आससादासु वैदेही प्रियां प्रणयिनीं सखीं। तां समाश्वासयामास सखीस्नेहेन सुव्रता॥ तां तु सीता पुनःप्राप्तां सरमां वल्गुभाषिणीम्। परिष्व-ज्यच सुस्निग्धं ददौ च स्वयमासनमिति" युद्ध-काण्डे सीतामुद्दिश्य मुन्युक्तेः। एवञ्च सख्यो-त्कर्षः प्रदर्शितः॥२३॥

ज्यो०—और देखो! सखाकी स्त्री भी सखी कहलाती है, यह अङ्गीकार करना चाहिए। क्योंकि श्रीवाल्मीकिजी लिखते हैं, कि राघवेन्द्र श्रीरामचन्द्रजीने अपने सखा गुरुपुत्र श्री-सुयज्ञजी से कहा है कि--"जनकनन्दिनी रशना (किङ्किणी) इत्यादि आभूषण आपकी पत्नीको देना चाहती हैं। क्योंकि आपकी पत्नी उनकी सखी हैं।" लङ्कामें जब श्रीजानकीजी की प्रिय सखी सरमाजी उनके पास आईं और सखी-स्नेहसे समझाने लगीं, तब उन प्रिय-बोलनेवालीको प्राप्त जानकर श्रीमहाराणीजीने उनका परिष्वङ्ग (अङ्कमाल) किया और बैठनेके अर्थ सुन्दर आसन दिया। यह युद्धकाण्डमें श्री-जनकनन्दिनीके उद्देशसे मुनिका वचन है। इस प्रकार सख्य-रसका उत्कर्ष दिखाया॥ २३॥

चं०—तस्मात् श्रीरघुनन्दने दृढस्नेहः एका-न्तमकश्च विशेषतः सखाएव श्लाघनीयो नत्वन्ये।

तथाच सुग्रीववाक्यम्—"सर्वथाहमनुग्राह्यो देवतानां न संशयः। उपपन्नगुणोपेतस्सखायस्यभवान्मम॥ सोऽहंसभाज्यो बन्धूनां सुहृदांचैव राघव। यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम्॥ आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा। निर्दोषो वा सदोषो वा वयस्यःपरमागतिः॥ धनत्यागः सुखत्यागो देहत्यागश्च राघव। वयस्यार्थे प्रवर्तन्ते स्नेहंदृष्ट्वा तथाविधम्॥ तत्तथेत्यब्रवीद्रामः सुग्रीवप्रियदर्शनम्। लक्ष्मणस्याग्रतोलक्ष्म्या वासवस्येव धीमतः॥२४॥

इतिश्री श्रीमच्चक्रवर्तिचक्रचूडामणि श्रीमन्महाराजाधिराजेन्द्रकुमार श्रीलाल श्रीअवधशरणनिर्मिते सख्यसिन्धु-चन्द्रोदये मध्यालोकः।

ज्यो०—अतः श्रीरघुनन्दनमें दृढ़ स्नेह एवम् ऐकात्म्यरखनेवाला प्रशंसनीय सखाहीहै, दूसरा नहीं। सुग्रीवजीने कहा है कि—'हे रघुवंशमणे! हमतो अब देवताओंसे भी अनुग्राह्य हैं अर्थात सब देवता भी हमपर अनुग्रह करेंगे। इसमें कुछभी संशय नहीं है। उपपन्न दिव्य गुणोंसे युक्त आप जिसके सखा हुए हैं, वह मैं, अपने बन्धुओं तथा मित्रोंमें भी माननीय हुआ। क्योंकि अग्निको साक्षी देकर रघुवंशमें

उत्पन्न आप हमारे सखा बने । चाहे धनी हो या दरिद्र, दुःखी या सुखी हो, सदोष अथवा निर्दोष हो, सखाकी परमगति सखाही है । चाहे धनका त्याग होजाय, परमसुखका त्याग होजाय, शरीरका भी त्याग क्यों न होजाय, पर पूर्ण स्नेही अपने सखाके अर्थ अच्छे लोग तत्पर हो जाते हैं । इस प्रकार सुग्रीवके वचन सुनकर श्रीरघुनाथजीने उनसे कहा कि— बहुत ठीक है, ऐसाही है ।" यह लक्ष्मणजीके सामने, जैसे इन्द्रके सामने कहा जाय तैसे, श्रीरामजीने कहा है ॥ २४॥



॥ श्रीसीतारामोविजयतेतराम् ॥

❁ श्रीहनुमतेनमः ❁

# ❁ पश्चिमालोकः ❁

ॐ यो ह वै श्रीरामचन्द्रःसभगवान् यः सच्चिदानन्दाद्वैतैकरसात्मा भूर्भुवः स्वः तस्मै वै नमोनमः ।

चं०—"ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवद्वचनात् जीवलोक ईश्वरांश इति विदितम् । यादृशः स ईश्वरः पुरुषोत्तमः तदंशजीवलोकोऽपि तथैव पुरुषाकारोस्ति इति स्वाभाविकम्, यथा श्रीमद्भगवद्गीतायां—"द्वाविमौपुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षरउच्यते॥ उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥ क्षरशब्दनिर्दिष्टः पुरुषः क्षरस्वभावो बद्धजीव इति विज्ञेयम् । तथा च अक्षरशब्दनिर्दिष्टः पुरुषो क्षरणलक्षणावागमनविमुक्तः, निश्चलः, परधाम्निगतः, स्वरूपेणस्थितो, मुक्तात्मा कूटस्थ इत्युच्यते । तयोरन्यः पुरुषोत्तमः श्रीरामचन्द्रोस्ति । उभावपि क्षराक्षरौ पुरुषौ इति भगवतः श्रीकृष्णस्य वचनात् प्रसिद्धम् । तयोरुत्तमः पुरुष ईश्वरोऽस्ति, यस्यांशो जीवलोकः

सनातनः। यतः स ईश्वरः पुरुषोत्तमः पुरुषाकारोऽस्ति, अतः "भोगमात्रसाम्यलिङ्गाच्च" इति ब्रह्मसूत्रप्रमाणात् जीवः पुरुषोत्तमस्य भगवतः श्रीरामभद्रस्य समलिङ्ग इति निष्पन्नम्। तस्मात् ईश्वरस्य पुरुषोत्तमस्यचांशजीवलोकः तल्लिङ्गः पुरुषलिङ्गञ्चास्ति। तदेव सख्यम्। जीवो नित्यः पुरुषाकारःपुरुषोत्तमस्य श्रीरामभद्रस्य अयंसखा। शब्दशास्त्रतोऽपि जीवात्मसखिशब्दाः पुल्लिङ्गत्वेन समानाः।

यत्र 'स न स्त्री न पुरुषो न नपुंसकमिति' ख्यातं तत्र मायिकस्त्रीपुरुषादौ मायायाञ्च तात्पर्य्यमिति, यथा— 'मायाह्येषा मयासृष्टा यत्पुमांसं स्त्रियं सतीं।" किन्तु ईश्वरांशस्य जीवस्य शुद्धस्वरूपः पुरुषाकारोऽस्ति। मायायास्त्र्याकारः तथाच ईश्वरस्य पुरुषाकारः। चैतन्यस्य निराकारावस्थामुद्दिश्य "न स्त्री नचपुमानेष न चैवायं नपुंसकमिति" ख्यातम्। परञ्च साकारावस्थायां स नित्यपुरुषाकार इति निश्चितम्

यदा सविशेषत्वे पुंस्त्वं तदा निर्विशेषत्वेऽपि तस्याभिव्याप्तिरिति सिद्धम्। यदि चेत्

काष्ठेऽग्निर्नास्ति तदा तत्र तस्योद्भवः कथं स्यात्। अतएव तस्य पुरुषस्य जीवस्य च पुंस्त्वं सनातनसिद्धम् ॥१॥

ज्यो०—"ममैवांशो जीवलोके जीवभूतः सनातनः।" भगवान् श्रीकृष्णके इस वचनसे यह विदित हुआ कि जीव ईश्वरका अंश है। जैसा वह ईश्वर पुरुषोत्तम है वैसाही उसका अंश जीव भी पुरुषाकार है। ऐसा होना स्वाभाविकही है, जैसा गीतामें कहा है कि—" लोकमें दो प्रकारके पुरुष हैं, क्षर और अक्षर। तीसरा पुरुषोत्तम है जिसे परमात्मा कहते हैं। क्षर-शब्दसे बद्ध जीव और अक्षरसे क्षरणरूप-आवागमनसे विमुक्त, परधामगत, स्वरूपमें स्थित मुक्त जीव निर्दिष्ट हैं, जिन्हे कूटस्थ भी कहते हैं। क्षर और अक्षर, इन दोनों प्रकारके पुरुषों (जीवों) के परे पुरुषोत्तम श्रीरामजी हैं। भगवान् श्रीकृष्णके वचनानुसार दोनों प्रकारके क्षर (बद्ध) और अक्षर वा कूटस्थ (मुक्त) जीव पुरुषही हैं। उनमें अपेक्षाकृत उत्तम पुरुष ईश्वर है, जिसके अंश अविनाशी जीव हैं। जब वह ईश्वर पुरुषोत्तम पुरुषाकार है तब "भोगमात्र साम्यलिङ्गाच्च"—ब्रह्मसूत्रके इस प्रमाणसे जीव पुरुषोत्तम भगवान् श्रीरामभद्रकाही समलिङ्ग है, यह निष्पन्न हुआ। अतः उत्तम पुरुष जो ईश्वर है उसका अंश जीवभी उसीके लक्षण एवम् लिङ्गका हुआ। यही साम्यलिङ्ग सख्य है। यह जीव नित्य

पुरुषाकार पुरुषोत्तम श्रीरामचन्द्रजीका सहज सखा है। जीव, आत्मा और सखापद, पुंबोधकत्वमें समानही हैं अर्थात पुल्लिङ्ग हैं।

जहां यह कहा गया है कि—'वह (परमात्मा) न स्त्री, न पुरुष और न नपुंसक है'। सो मायिक स्त्री-पुरुषादिसे, मायासे उसका तात्पर्य्य है, जैसा श्रीमद्भागवतमें भगवान्‌का वचन है कि——'वह मेरी रची हुई माया है जो किसी को पुरुष और किसी को स्त्री बनाया करती है।' किन्तु ईश्वरांश जीवका शुद्ध स्वरूप तो पुरुषाकारही है। वे, ईश्वर और उसके अंश जीव, दोनों हंस अथवा पुरुष हैं। मायाका स्त्री रूप है और ईश्वरका पुरुष। चैतन्यकी निराकारावस्थाको लक्ष्य करकेही " न स्त्री वै न पुमानेष न चैवायं नपुंसकः " कहा गया है। परन्तु साकारावस्थामें वह नित्य पुरुषाकारही है, यह निश्चित है।

जब साकारावस्थामें पुरुषत्व है तब निराकारावस्थामें भी उसकी (पुरुषत्वकी) व्याप्ति सिद्ध है। यदि काष्ठमें अग्नि नहीं है तो उसमें वह उत्पन्न कैसे होगी। अतएव उस पुरुष का अथवा जीवका पुरुषत्व सनातनसिद्ध है॥ १॥

**चं०—चतुर्विध पुरुषार्थानां मोक्षएव परमपुरुषार्थः। तस्य ज्ञानमेव समुपायः। यथा— "ऋतेज्ञानान्नमुक्तिः"। तस्य पुंस्त्वे अधिकारित्वम्।**

अस्य सर्गस्य पूर्वं सद्रूपपुरुषोत्तम एवासीत्। ततो अष्टधाप्रकृतिरजायत। प्रलयावस्थायां प्रकृतिः क्रमेण पुरुषोत्तमे लीना भवति। अतः निर्विकारावस्थायां कैवल्येस्थित्याञ्च स्वरूपेण स्थितस्य पुरुषस्य केवलं पुरुषाकारत्वमिति ज्ञातम्। यतः सहजविकृतिस्वभावा सदाऽसदाभासस्वरूपा च प्रकृतिः, तत् प्रतिकृतिश्च सर्गेऽस्मिन् मोहयोनिः नार्य्येवास्ति। अतः तस्या मोक्षे ज्ञानेच सामान्यतया अनधिकारः, यथा— "तपःप्रधाना नार्य्यः कैवल्यानुपयोगित्वात्।" स्वपातिव्रत्योत्कर्षात् तपश्चर्य्यायास्सा भर्तृसायुज्येगता। एवञ्च तद्द्वारेण तस्य मोक्षप्राप्तिः। तस्मात् पुरुषस्य प्राधान्यम्। न स्त्रीणां स्वतन्त्राधिकारित्वम्।

पुरुषसंस्कारविशिष्टस्य पुरुषस्य मानसे कथं स्त्रीभावोदयः। तत्र स्त्रीत्वारोपणं संस्कारसाङ्कर्य्यमात्रमेव। यदिचेत् जन्मजन्मान्तरेऽपि तद्भावनाभ्यासः क्रमेण भवेच्चेत्तदा दैवयोगात् स्त्रीभावप्राबल्यात् स्त्रीयोनिगतानां भावुकानां शृङ्गारस्याधिकारो भवेदिति। तत्र प्रायः

स्त्रियः स्वभावसिद्धाज्ञानत्वात् शृङ्गारस्य कामप्रधानत्वाच्चाध्यात्मज्ञानस्यानवकाशः । यद्विना परमपुरुषोत्तमस्यप्राप्तिरूपमोक्षः, अनावृत्तिपदञ्च सर्व्वथैव सुदुर्ल्लभम् ।

स्थूलदेहस्यप्रतिबिम्बं सूक्ष्मं, तत्संस्कारावशेषमात्रमेव लयाकारं कारणशरीरम् । तस्मात् आकारणकलेवरं पुंस्त्वं वा स्त्रीत्वंच व्याप्तम् । अतएव पुंसि स्त्रीत्वकल्पनायामत्यनुपपत्तिः । तत्र स्थूलदेहाभिमानत्वात् भावनाव्यभिचारः। वाङ्मनोगोचरातीते निर्विकल्पतत्त्वेऽतीन्द्रियविषये कथं गतिः।

अतएव प्रायः पुंसि शृङ्गारभाव अनुपयोगी, अस्वाभाविकश्च दर्शितः । यदि तस्मिन् स्त्रीत्वसिद्धिर्भवति तद्दैववैचित्र्यम्, पात्रवैलक्षण्यञ्च। भावनाप्रकर्षात्समानाकारापत्तिमात्र कस्मिंश्चिद्पुरुषान्तष्करणे स्त्रीत्वाभासः। सच भगवद्दर्शनानुभवेन तद्गुणश्रवणेनवा स्वान्तस्संस्कारानुसारनिसर्गोद्रेकत्वात् भक्तिप्रकारः । परञ्च न तत्र स्थायित्वमिति । देहाभिमानप्राबल्यात् तद्भङ्गोऽपि सम्भवः ॥२॥

ज्यो०—चार प्रकारके पुरुषार्थोंमें मोक्ष ही परम पुरुषार्थ है। उसका उपाय ज्ञान है, जैसा सिद्धान्त है कि बिना ज्ञानके मुक्ति नहीं होती ( "ऋते ज्ञानान्नमुक्तिः" )। उस ज्ञानका अधिकारी पुरुषही है।

सृष्टिके पूर्व केवल सद्रूप ( सत्तामात्र ) पुरुषोत्तम ही था। उससे आठ प्रकारकी प्रकृति उत्पन्न हुई। प्रलयकालमें क्रमशः प्रकृति पुरुषमें लीन होती है। निर्विकार अवस्थामें, कैवल्य-स्थितिमें, स्वरूपमें स्थित पुरुषका केवल पुरुषाकार रहता है, यह ज्ञात हुआ। यतः प्रकृति सहज-विकृति-स्वभावा एवम् सदा असदाभास-स्वरूपा है तथा उसकी प्रतिकृति ( प्रतिरूप ) इस संसारमें मोहयोनि स्त्रियां हैं। अतः उनकोमोक्ष औरज्ञानकाप्रायःअधिकारनहींहै,जैसाशास्त्र-मतहै कि—'नारी तपप्रधाना हैं, क्योंकि वे ज्ञानके लिये उपयोगिनी नहीं हैं।' अपने पातिव्रत्यके उत्कर्ष और तपस्यासे वे पतिमें लीन होती हैं। इस प्रकार पुरुषद्वारा उनकी मुक्ति होती है। अतः पुरुषकी प्रधानता है ; स्त्रियोंको स्वतन्त्र अधिकार नहीं है।

पुरुष-संस्कार-विशिष्ट अर्थात शुद्ध पुरुषके मनमें स्त्रीभावका कैसे उदय होसकता है? यदि उनमें स्त्रीत्व-कल्पना उत्पन्न होती है तो वह संस्कारकी सङ्कर-

तामात्र है । यदि जन्म-जन्मान्तरतक स्त्रीभावनाका अभ्यास क्रमसे होता रहे तो दैवयोगसे, स्त्रीभावकी प्रबलता से, वे भावुक स्त्री-शरीरको प्राप्त होंगे । तब कहीं वे शृङ्गारके पात्र होसकेंगे । तब भी स्त्रीमें प्रायः स्वभावसेही अज्ञान और शृङ्गारके कामप्रधान होनेके कारण ("यदपि योषिता अनअधिकारी") उन्हें अध्यात्मज्ञानकी सुविधा नहीं, जिसके विना परम पुरुषोत्तमकी प्राप्तिरूप मोक्ष और अनावृत्तिपद (आवागमन-राहित्य) अत्यन्त दुर्लभ है ।

स्थूल देहका प्रतिबिम्ब सूक्ष्म शरीरहोता है अर्थात् स्थूल देह ही के रूपगुणके अनुसार, उसकी छायाके तद्वत् सूक्ष्म शरीर होता है । और कारण शरीर (जिसकी सुषुप्तिमें स्थिति है) उन्हीं स्थूल-सूक्ष्मका संस्कारशेषमात्र लयरूप होता है । इसलिये स्त्रीत्व वा पुरुषत्व कारण-शरीरपर्य्यन्त व्याप्त होता है—आशय यह कि यदि स्थूल शरीर स्त्रीका होगा तो सूक्ष्म भी वैसाही होगा और कारणमें भी उसीकी व्याप्ति होगी और यदि स्थूल शरीर पुरुषाकार हुआ तो सूक्ष्म भी तदनुसार ही होगा और कारणमें भी वही गतार्थ होगा, उसीकी छाया होगी । अतः पुरुषोंको स्त्रीभाव धारण करनेमें बड़ी बाधा है । स्थूलदेहाभिमान अत्यन्त कठिन होता है । उसके कारण भावनामें व्यभिचार होजायगा अर्थात् स्त्री-भावना शुद्ध नहीं होसकती । भावनाकी इस सङ्करताके कारण वाणी और मनसे अगोचर, निर्विकल्प-तत्त्व (जिसमें

कल्पनाकी गति नहीं) तथा अतीन्द्रिय-विषय परमात्मामें कैसे गति होसकती है ? अतएव पुरषोंके लिये शृङ्गारभावना किम्वा स्त्रीत्व-कल्पना प्रायः अनुपयोगिनी और अस्वाभाविकी दिखलाई दी। यदि पुरुषोंमें स्त्रीत्वकी सिद्धि हो तो वह दैवकी विचित्रता और पात्रकी विलक्षणता है। भावनाके प्रकर्ष होनेसे समानाकारकी प्रतीतिमात्र किसी-किसी पुरुषके अन्तष्करणमें स्त्रीत्वका आभास होता है। भाव यहकि जब भावना पराकाष्ठाको पहुँचती है तब जिसकी भावना की जातीहै, आत्म-विस्मृति होनेसे उससे, एकाकारकी प्रतीति होती है। इसी सिद्धान्तानुसार पुरुषके अन्तष्करणमें स्त्रीत्वाभासमात्र होसकता है। वह, भगवद्रूपके अनुभवसे, अथवा गुणश्रवणसे, उस अन्तष्करणविशेषके संस्कारानुसार स्वतः उत्पन्न होनेसे भक्तिका प्रकार है। परन्तु वह स्थायी नहीं; देहाभिमानकी जागृतिसे उसका भङ्ग होसकता है ॥ २ ॥

चं०—यतः, आर्यः श्रीरामचन्द्रः एकपत्नीव्रतः, धीरोदात्तः, नायकोत्तमः। परदारापराङ्मुखः। तत्र बहुभार्य्या-प्रसङ्गाभावः, परकीयास्नेहातिशयहानिः, यथा, मातरं श्रीकैकेयीं प्रति श्रीभरतकुमारोक्तयः—

"कच्चिन्न परदारान्वा राजपुत्रोऽभिमन्यते।
कस्मात्स दण्डकारण्ये भ्रातारामो विवासितः॥"

तथा च श्रीभरतकुमारं प्रति कैकेय्याःउक्तयः—
"न रामो परदारान् स चक्षुर्भ्यामपि पश्यति"।
श्रीमद्भागवतेऽपि—
"एकपत्नीव्रतधरो राजर्षि चरितः शुचिः।
स्वधर्म्मं गृहमेधीयं शिक्षयन् स्वयमाचरन्॥"
श्रीमद्रामायणे च—
न सीतायाः परां भार्य्यां वव्रे स रघुनन्दनः।"
यज्ञे-यज्ञे च पत्न्यर्थं जानकीकाञ्चनीभवदिति"
प्रमाणात् श्रीरामभद्रस्य एकपत्नीव्रतत्वं निश्चितमिति। विरुद्धप्रमाणाभावे सन्देहस्यानवकाशः।

यदि चेत् तस्य भद्रस्य काप्यन्या पाणिगृहीतीभार्य्या श्रीजनकनन्दिन्याः सपत्नीभवेयुश्चेत्तद् यज्ञविधिपूर्त्तये हेममयश्रीसीतामूर्त्तिनिर्माणस्य किम्प्रयोजनमिति। अतः शुद्धशृङ्गारभागिनी भोगिनी च तस्याद्वितीया पाणिगृहीत्यर्द्धाङ्गिन्यार्या श्रीजनकनन्दिन्येवास्ति, इति सर्वसम्मतम्। तदितरा अपराः सन्ति। अन्यस्यां शृङ्गाराभासः, नतु शृङ्गारः॥३॥

ज्यो०—यतः आर्य श्रीरामचन्द्रजी एकपत्नीव्रत,

धीरोदात्त नायकोत्तम और परदारापराङ्मुख हैं। उनमें बहु-भार्याके प्रसङ्गका अभाव और परकीयाप्रेमकी अतिशय हानि है, जैसा मातुश्री कैकेयीके प्रति श्रीभरतकुमारका वचन है—'क्या किसी परस्त्रीकी राजकुमार श्रीराघवेन्द्रने इच्छा की है? किस लिए वे दण्डकारण्यमें निर्वासित किए गए?

श्रीकैकेयी अम्बाने भरतकुमारसे कहा है—"श्रीराम-भद्र परस्त्रीको आंखोंसे देखते भी नहीं।

श्रीमद्भागवतमें भी कहा है—'श्रीरामचन्द्रजी एक पत्नीव्रतधर, राजर्षि और पुण्यचरित हैं। अपने आचरण से गृहस्थोंको स्वधर्मकी शिक्षा देते हैं।'

इसी प्रकार श्रीमद्रामायणमेंभी—'श्रीसीताजीके अति-रिक्त दूसरी किसी भार्याका श्रीरघुनन्दनने वरण किम्वा पाणि-ग्रहण नहीं किया। हर एक यज्ञमें वे श्रीसीताजीकी स्वर्णमयी प्रतिमा स्थापित करते थे।

इन प्रमाणोंसे श्रीरामभद्रका एकपत्नीव्रतत्व निश्चित है। इसके विरुद्ध कोई प्रमाण न होनेसे इसमें सन्देह करने का अवकाशही नहीं है। यदि श्रीरामभद्रकी कोई अन्य पाणिगृहीती पत्नी, श्रीजनकनन्दिनीकी सपत्नी होती तो यज्ञोंमें सुवर्णमयी श्रीसीतामूर्त्तिके स्थापन करनेका क्या प्रयोजन था! अतः शुद्ध शृङ्गारकी भागिनी और भोगिनी उनकी एकमात्र पाणिगृहीती अर्द्धाङ्गिनी आर्या श्रीजनकनन्दिनी ही हैं, यह सर्वसम्मत है। उनसे इतर परदाराएँ हुई। परदा-राओंमें शृङ्गाराभास होता है, न कि शृङ्गार॥ ३॥

चं०— यत्तु "रामस्य परमास्त्रियः" इत्यत्र "स्त्रियः"इति बहुवचनेन श्रीरामस्य बहुभार्य्यात्वमित्युक्तम्। तन्न। "एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे"इति प्रमाणेन सम्मानार्थकं बहुवचनान्तं"स्त्रियः"इति प्रयोगः।श्रीजनकनन्दिन्यां तस्य तात्पर्य्यमिति। तदितरान्यासां"परमेति"विशेषणविशिष्टानां स्त्रीणां न सम्भवः। यदि काचनान्याः "परमाः" श्रेष्ठाःस्त्रियः भवेयुश्चेत्तदा ताः कथमनिर्दिष्टाः। श्रीमन्मारुतनन्दनोऽपि लङ्कायां श्रीजानक्यादर्शने सर्व्वैः परिवारैः परिकरैस्सह ता अपि कथन्नाचिन्तयत्। पुनश्च "स्त्रियः"इति सामान्यपदमित्युक्तम्,नात्र भार्य्याशब्दः प्रयुक्तः। अतएवान्तःपुरवासिनीषु परिचारिकाषु तल्लक्षणा। मन्थराऽपि दासी।सधर्म्मिणीषु सजातीयासुच तस्या स्पर्धा स्वाभाविकी।

यदेकपत्नीव्रतः श्रीरामः तदा तस्मिन् बहुभार्य्यात्वं कथं स्यात्। अन्यथा "यज्ञे-यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवदिति" मुनिवाक्यस्य व्यर्थापत्तिः। एकस्मिन्काले श्रीमर्य्यादापुरुषोत्तमावतारे, एकस्मिन्सत्पात्रे श्रीमद्रामभद्रे च

द्विविधधर्म्मस्य कथं सम्भवः ? सूर्य्योदये कथमन्धकारश्चान्धकारे कथं सूर्य्योदयः ॥४॥

ज्यो०—"रामस्य परमास्त्रियः" में जो "स्त्रियः" बहुवचन है उससे श्रीरामजीके अनेक स्त्रियोंका होना सूचित किया है। ऐसा नहीं है। "एकत्वं न प्रयुञ्जीत गुरावात्मनिचेश्वरे।" अर्थात् 'गुरुजन' आत्मा और ईश्वरमें एक वचनका प्रयोग नहीं करना चाहिए,' ऐसा सिद्धान्त है। इस प्रमाणसे "स्त्रियः," यह बहुवचनान्त प्रयोग सम्मानार्थक है। श्रीजनकनन्दिनीमें उसका तात्पर्य्य है। उनसे इतर अन्य कोई स्त्री "परमा" विशेषणसे विशिष्ट नहीं होसकती। यदि अन्य कोई "परमा" (श्रेष्ठा)स्त्री होती तो क्या उसका कहीं वर्णन न होता ? श्रीमारुतनन्दन भी लङ्कामें श्रीजानकीजीके दर्शन न होनेसे सब परिवार-परिकरोंके साथ ऐसे विशिष्ट पात्रोंकी (श्रीरामचन्द्रजीकी उन परमा, श्रेष्ठा स्त्रियोंकी) क्या चिन्ता नहीं करते ?

फिर, "स्त्रियः," यह सामान्य पद है, यहां भार्य्या शब्दका प्रयोग नहीं हुआ है। अतएव अन्तःपुरवासिनी परिचारिकाओंमें उसकी लक्षणा है, अर्थात श्रीरामजीकी दासियोंसे उसका अभिप्राय है, न कि पत्नियोंसे। यह उक्ति मन्थराकी है। वह दासीही थी। इस लिए उसका अपनी सधर्मिणी और सजातीया अर्थात् दूसरे राजा या राजकुमारकी दासियोंके प्रति स्पर्धाका होना स्वाभाविकही है।

जब सब प्रकार श्रीरामजीका एक पत्नीव्रत होना सिद्ध है तब उनमें बहुभार्य्यत्व कैसे होसकता है अर्थात् उनकी और पत्नियां कहांसे होंगी? यदि ऐसा न माना जायगा तो "यज्ञे-यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत्" अर्थात यज्ञ-यज्ञमें भार्य्यास्थानमें श्रीजानकीजीकी सोनेकी प्रतिमा स्थापित करते थे,"यह मुनिवाक्य व्यर्थ होजायगा। एक काल श्रीमर्य्यादापुरुषोत्तमावतारमें, एकही श्रेष्ठ पात्र श्रीरामभद्रमें दो प्रकारके धर्मोंका एकही साथ कैसे सम्भव होसकता है? सूर्य्योदयके समय अन्धकार और अन्धकारके समय सूर्य्योदय कैसे होगा? ॥ ४ ॥

चं०— ननु "स्त्रीभिस्तुमन्ये विपुलेक्षणाभिः त्वं रंस्यसे वीतभयः कृतार्थः" इत्युक्त्या श्रीरामस्यानेकभार्य्यत्वं प्रतीयत इति चेन्न। स च विलापः, दुःखोद्गारश्चेति। दुःखातिशये मोहाधिकारत्वात् बुद्धिभ्रंशः। एवञ्चान्तरेन्द्रियाणि सकलानि विकलानि भवन्ति। तद्दशायां वाक् भ्रमभ्रष्टा विह्वलाच निस्सरतीति। न तस्याः प्रामाण्यम्। एवञ्च श्रीजनकनन्दिन्याह्येताः विलापोक्तयोऽपि तादृश्यो बोधव्याः, यथा मारीचप्रसङ्गे श्रीलक्ष्मणकुमारं प्रति श्रीमायासीताकटूक्तयः— "लोभात्तु मत्कृते नूनं नानुगच्छसिराघ-

वम्। व्यसनं ते प्रियंमन्ये स्नेहोभ्रातरि नास्ति ते।" इत्यादिना। तत्र तस्याः रोषोत्कर्षमेव कारणम्। तथैव वियोगजन्यः दुःखाधिक्यमेवात्र विलापस्य हेतुः, नतु वास्तविकम्। केवलदुःखोत्कर्षव्यञ्जनायां तस्य तात्पर्यमिति।

पुनश्च, सा विलापरूपा दुस्सम्भावना भविष्यत्काले संलग्ना। श्रीजनकनन्दिन्या जीवनान्ते तस्यावकाशसम्भवः। तद्योगोऽनुपलब्धत्वादसिद्धः। तथाच "न सीताया परांभार्य्यां वव्रे स रघुनन्दनः।" "न रामः परदारान्वाचक्षुर्भ्यामपि पश्यतीति महर्षिवचनात् न श्रीरामभद्रस्य एकपत्नीव्रतत्वे काचिदनुपपत्तिः ५॥

ज्यो०—"स्त्रीभिरतुमन्ये" इति, अर्थात 'अनेकविशालाक्षि स्त्रियोंसे निर्भय विहार करके कृतार्थहोगे।' श्रीजनकनन्दिनीकी इस उक्तिसे श्रीरामचन्द्रजीकी अनेक पत्नियोंका होना प्रतीत होता है। ऐसा नहीं है। श्रीजानकीजीका यह विलाप एवम् दुःखोद्गारहै। अत्यन्त दुःखकी दशामें मोहका अधिकार होजानेसे बुद्धि मारी जाती है एवम् अन्तष्करण की और सब इन्द्रियांभी विकल होजाती हैं। उस दशामें वाणी भ्रमसे भटकी और अटपटी निकलती है।

उसका प्रामाण्य नहीं माना जाता । श्रीजानकीजीका यह विलापवचनभी उसी प्रकारका जानना चाहिए। मारीचके प्रसङ्गमें श्रीमायासीताजीने श्रीलक्ष्मणकुमारको जो कटुवचन कहे हैं वे भी इसी प्रकारके हैं, यथा--'मेरे लोभसेही तुम राघवके निकट नहीं जाते। उनका दुःख तुम्हें प्यारा है; तुम्हें कुछभी उनका प्रेम नहीं है" इत्यादि। वहां ऐसा कहनेका कारण केवल उनके (मैथिलीके) रोषकी प्रबलता है। उसी प्रकार वियोगजनित दुःखकी अधिकताही यहां विलापका कारण है, वह विलापमात्र है, न कि यथार्थ। केवल दुःखका बाहुल्य प्रकट करनेहीमें उसका तात्पर्य्य है।

फिर, यह विलापरूपा दुस्सम्भावना (अनुचित कल्पना) भविष्यत्कालमें लागू है। श्रीजानकीजीके जीवनके पश्चात् उसका अवकाश होना सम्भव है। वैसा संयोग न प्राप्त होने से अर्थात् श्रीजनकनन्दिनीके इसलोकमें विद्यमान रहनेमे उनकी उस विरहमयी कल्पनाके चरितार्थ होनेका अवसर ही नहीं आया, वह सर्वथा निरस्त रही। तथा "श्रीसीताके अतिरिक्त दूसरी भार्य्याका श्रीरघुनन्दनने वरण नहीं किया।" "उन्होंने किसी परस्त्रीको आंखे उठाकर देखा तक नहीं।" महर्षिवाल्मीकिके इन प्रबल वचनोंसे श्रीरामभद्रके एकपत्नी-व्रत होनेमें कुछभी सन्देह नहीं रह जाता ॥ ५ ॥

चं०—यदि चेत्, श्रीपद्माभूलीलादेवी

नामपि श्रीरामभद्रस्य पत्नित्वमिति निर्द्दिष्टम्। तन्न। ताः श्रीरामरूपान्तर्गता अप्रत्यक्षाः शक्तयः सन्ति। केवलं सर्गारोहण समये दिव्यास्त्राण्यीव मूर्तिमत्यः दृग्गोचराः। तासां न जनकनन्दिनीव पत्नित्वमिति भावः। ईश्वरोऽनन्तशक्तिमदनेकरूपः। समयभेदेन नैमित्तिकतया स्वरूपानुसारेण तच्छक्तयः प्रादुर्भवन्ति। तस्मात् एका श्रीजनकनन्दन्येव श्रीरामचन्द्रस्य भार्य्या॥

ज्यो०——यदि यह कहो कि श्रीलक्ष्मी-भू-लीला देवी तोभी श्रीरामचन्द्रजीकी पत्नियां हैं। ऐसा नहीं है। वे श्रीरामभद्रके स्वरूपान्तर्गत रहनेवाली अप्रत्यक्ष शक्तियां हैं। केवल भगवानके स्वर्गारोहणके समय दिव्यास्त्रोंकी तरह मूर्त्तिमती होकर वे दृष्टिगोचर हुई थीं। उनमें श्रीजानकीजीकी तरह पत्नित्व नहीं है। ईश्वर अनन्तशक्तिमन्त और अनेकरूप है। समय-समय पर आवश्यकतानुसार और स्वरूपानुसार उनकी शक्तियोंका आविर्भाव होताहै। अतः मर्य्यादापुरुषोत्तम श्रीरामचन्द्रजीकी श्रीजनकनन्दिनीही एकमात्र भार्य्या हैं।

चं०—"सीतायाश्चरितं महदिति" महर्षिवचनात् श्रीमद्रामायणं स्त्रीप्रधानम्। तन्न। महाकाव्ये नायकस्य प्राधान्यमिति, यथा— "सद्वंशः

क्षत्रियोवाऽपि धीरोदात्तगुणान्वितः"(—साहित्य-दर्पणे)। नायिका सदा नायकाधीना—"न स्त्री स्वातन्त्र्यमर्हति"। यस्य चरितं महत् सा सीता श्रीरामेऽन्तर्गता, न तस्य स्वातन्त्र्यमिति। अत-एव श्रीरामस्यैव प्राधान्यम्। सा सदैव तदाश्रिता, यथा श्रुतिः—"रामसान्निध्यवशात् जगदानन्द-दायिनी। उत्पत्तिस्थितिसंहारकारिणीं सर्वदे-हिनाम्॥"(—श्रीरामतापनीयोपनिषद्)श्रीमद्रा-माश्रयेण तत्समस्तचरितं सङ्घटितम्। यथा सेनाया विजयः राज्ञ्येव मन्तव्यः। अङ्गस्य कार्य्यं अङ्गिषु समर्पितम्भवति।

"कुरुरामकथां पुण्यां श्लोकबद्धां मनोरमाम्।
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः॥"

बालकाण्डे।

"आदिकाव्यमिदं राम त्वयि सर्व्वं प्रतिष्ठितम्।
नह्यऽन्योर्हति काव्यानां यशोभाग्राघवादृते॥"

उ० काण्डे।

इत्यादि वचनेन सर्व्वेदमादिकाव्यं श्रीमद्रामायणं श्रीरामेप्रतिष्ठितम्, नह्यन्यस्मिन्। रामायणेति नामैव नायकस्य श्रीरामस्य प्राधान्य-बोधकम्। नान्नान्यप्रमाणापेक्षा। "सीताया-

श्चरितं महदिति" अन्यपात्रापेक्षया निर्दिष्टं, नतु रामापेक्षया।

श्रीमद्रामायणं वीररसप्रधानं करुणप्रधानं वा मतान्तरे, न तत्र कालत्रयेऽपि शृङ्गारस्य प्राधान्यमिति। तत्र स्थलस्थलेषु च वीरस्य करुणस्य वा निष्पत्तिः ॥६॥

ज्यो०—"सीतायाश्चरितंमहत" अर्थात् 'सीताचरित विस्तृत है,' महर्षिके इस वचनसे श्रीमद्रामायण स्त्रीप्रधान है। ऐसा नहीं। महाकाव्यमें नायककी प्रधानता होती है, जैसा "साहित्यदर्पण" में कहा है—"धीरोदात्तके गुणोंसे मण्डित उत्तम वंशका क्षत्रिय नायक हो।" नायिका सदा नायकके अधीन होती हैं, जैसा सिद्धान्त है कि—"स्त्रियों को स्वतन्त्रता नहीं है" ("न स्त्रीस्वातन्त्र्यमर्हति")। जिनके विस्तृत चरित्र हैं वे श्रीसीताजी श्रीरामजीके अन्तर्गत हैं, वे स्वतन्त्र नहीं हैं। अतएव श्रीरामजीकीही प्रधानता है। वे (श्रीसीताजी)सदैव उनकी आश्रिताहैं, जैसी श्रुति है कि—"रामसान्निध्यवशादिति"—श्रीसीताजी श्रीरामजीके सहयोग के कारण जगत्को आनन्द-देनेवाली और अखिल-देहधारियोंकी उत्पत्ति,स्थिति तथा संहार-करनेवाली हैं"—(श्रीरामतापनीयोपनिषत)। श्रीरामजीके आश्रयसेही उनके सम्पूर्ण चरित्र घटित हैं। जैसे सेनाकी विजय राजाकी मानी जाती है एवम् अङ्गका कार्य्य अङ्गीको समर्पित होता है।

"कुरु रामकथामिति"—'श्रीरामजीकी पावनी कथा तथा उनके समस्त गुप्त—प्रकट चरित्र सुन्दर श्लोकोमें निबद्ध करो'—( बालकाण्ड ) तथा "आदिकाव्यमिदं" इति—'यह सम्पूर्ण आदिकाव्य, हे रामजी, आपमेंही प्रतिष्ठित है, दूसरे किसीमें नहीं' (—उत्तरकाण्डे) । इत्यादि वचनोंसे यह सम्पूर्ण आदि-काव्य श्रीमद्रामायण श्रीरामजीहीमें प्रतिष्ठित है, किसी अन्यमें नहीं। 'रामायण' नामही अपने नायक श्रीरामजीकीही प्रधानता बतलाता है। इसमें किसी अन्य प्रमाणकी अपेक्षा नहीं। 'श्रीसीताजीका चरित्र महत है,' यह अन्य पात्रोंकी अपेक्षा कहा है,न कि रामजीकी अपेक्षा।

श्रीमद्रामायण वीररसप्रधान है, मतान्तरमें करुणा-प्रधानभी है। उसमें त्रिकालमेंभी शृङ्गारकी प्रधानता नहीं हो सकती । उसमें ठौर ठौर पर वीर अथवा करुणाकी निष्पत्ति हैं ॥ ६ ॥



# पर्य्यवसानम्।

चं०—

वसिष्ठः गौतमोऽत्रिश्च विश्वामित्रोऽथ नारदः।
शुको पराशरश्चैव ब्रह्मपुत्राः सहस्रशः॥१॥
सख्यभावेन मां प्राप्ता अगस्त्याद्या महर्षयः।

—रहस्यरामायणे,श्रीमुखवाक्यम्।

यथैव तरुबीजस्थः महास्कन्धः प्रशाखवान्।
तथैव सख्यबीजस्थः शृङ्गारादिरसोऽखिलः॥२॥
आधाराधेय-सम्बन्धः सख्ये सर्व्वरस्यहि।
तस्माच्छ्रीरामरूपस्य सख्य एव न संशयः॥३॥

शृङ्गाररूपोह्यहमेकएव परात्परः सर्व्वशरण्यतास्पदः। उभौ च बाहू परिकीर्तितौ मे सखासखी चोत्तमवेषधारिणौ॥४॥ दासश्च पादः परिकीर्त्तितो मे शान्तशिरश्चैव वदन्ति वेदाः वात्सल्य प्राणोहृदयोमनश्च तथापि सख्यः परतःपरात्मा॥५॥ सख्यात्परो नैव रसः परात्परो सर्वेषु वेदेषु च निश्चितं मुने। येनैव चैक्यं मम प्राप्य जीवः सुमोदते ब्रह्मपदे मनोहरे॥६॥

—लोमशसंहितायां, श्रीमुखवाक्यम्।

## पर्य्यवसान।

(दोहा)

ज्यो०—नारद-विश्वामित्र अरु, गौतम-अत्रि-वसिष्ठ।
ब्रह्मसुपुत्र सहस्रहूँ शुक-मुनि ब्रह्मविनिष्ठ ॥१॥
अगस्त्य-पराशर आदिहूँ भए महर्षि अनेक।
सख्य-भावते ते मिले हमैं समेत विवेक ॥२॥
——रहस्यरामायणमें, श्रीमुखवचन

विशाल स्कन्ध प्रशाखवत ज्यौं तरु बीज समाहिं।
तैसे शृङ्गारादि-रस रहत सख्य-रस-माहिं ॥३॥
अहै सख्य आधार रस उज्ज्वलादि आधेय।
तातैं रामस्वरूपवर अहै सख्यरस ज्ञेय ॥४॥

(रूप-घनाक्षरी)

दमपतिस्वभाव शृङ्गाररस रूप मेरो, [1]सबही शरण्य सुख-

---

१ दाम्पत्यभावसे शृङ्गार भगवान्‌का स्वरूप है। § श्रीजनकनन्दिनीसे अपना अभेद मानकर यहां भगवान्‌ने अपनेको शृङ्गाररूप कहा है।‡ जब वे अद्वैतसच्चिदानन्दैकरसात्मा हैं तब वे सख्यरूप हैं। क्योंकि भगवान् ने "तथापि सख्यः परतः परात्मा" कहा है। अर्थात 'सख्य' हमारा परात्पर परमात्मस्वरूप है। यदि शृङ्गार भगवान् का शरीर है तो सख्य आत्मा है। साधारणतः यह समझना चाहिये कि जब भगवान् अकेले अथवा सखाओंके संग हैं तब सख्यस्वरूप और जब श्रीजनकनन्दिनीजी के साथ हैं तब वे शृङ्गाररूप हैं—जैसे

§ नारि विलोकहिं हरषि हिय निज-निज-रुचि-अनुरूप।
जनु सोहत शृङ्गारधर मूरति परम अनूप ॥

‡ गिरा-अर्थ जलवीचिसम कहियत भिन्न, न भिन्न।
बन्दौं सीतारामपद जिनहिं परम प्रिय खिन्न ॥

दायक शोभानिधान। दक्षिण सखान वाम भुज हैं सखीन मेरी, सुन्दर सुवेश शुभशील दिव्य-गुण-ज्ञान। दास्यरस पाद शान्त शिर है वदत वेद, वातसल्य मेरो अहै, मानस-हृदय-प्रान। हौं तौ आपु सख्यरस अगम-अतर्क्य अति, सो परम आनन्दको निधान जान विद्वान ॥ १ ॥

(रोला)—सख्य परे रस नाहिं मुने, श्रुति-निश्चित मत है।
जिहितें हौंसन एक होयकै जीव रमत है॥
गुणातीत सो पाय ब्रह्मपद मोद करत है।
भोगत मोसम दिव्य भोग पुनि भव न परत है॥

—लोमशसंहितामें, श्रीमुखवाक्य।

—:÷:—

## चन्द्रामृतबिन्दुः।

चं०—

ब्रह्मानन्दे न वैषम्यं सच्चिदानन्दलक्षणे।
सख्यब्रह्मरसोह्येव नानारूपः प्रकाशते ॥१॥
केवलं पात्रभेदेन तारतम्यन्तु भासितम्।
रुचीनामतिवैचित्र्यात् भावभेदोऽपिजायते ॥२॥
सत्यप्रेमाधिकारेण दुर्लभं सुलभं सदा।
असम्भाव्योऽपि सम्भाव्यस्तस्यामोघप्रभावतः ३॥

---

"धर्मराजही धर्मभेदसे दण्डकालमें यमराज कहलातेहैं और न्यायकाल में धर्मराज, अथवा जैसे श्रीकृष्ण नन्दनन्दन (गोपाल) और वासुदेव भी कहलाते हैं, तैसेही श्रीरामजी शृङ्गारस्वरूप भी हैं और सख्य तो, परात्पर ब्रह्मात्मरूपसे, वे स्वयम्ही हैं।

एवमेवाऽपि रागेण भोगरूपेण सर्व्वतः ।
सुलभं दुर्ल्लभं त्वेवं भवबन्धो दृढोधिकम् ॥४॥
रसः किल रहस्यो वै हृद्देशमवलम्बते ।
अप्रकाश्यो यतो लोके रक्षणीयः प्रयत्नतः ॥५॥
दयितस्य सुखेनैव सुखं सर्व्वं मतं ध्रुवम् ।
तस्योज्ज्वल यशः क्वापि कर्त्तव्यं न च लाञ्छितम् ६
लोकवेदानुसारेण सम्प्रदायानुमोदितः ।
पालनीयस्सदाचारः सुमर्य्यादापुरस्सरम् ॥७॥
अस्य सख्यस्य शास्त्रस्य राकेशस्य प्रयोजनम् ।
रसरूपं प्रकाशं च तत्त्वतः सुमनोहरम् ॥८॥
भ्रमन्तं विरमन्तं ये रागारण्ये तमोमये ।
अन्वेषन्ते वृथा दिव्यं रसामृतसरोवरम् ॥९॥
स्वप्रकाशप्रदानेन सत्पथस्य प्रदर्शकः ।
सख्यसिन्धूदितः पूर्णचन्द्रोऽयं सुप्रकाशितः १०॥
ईश्वरे परिलग्नेन दोषो वै सद्गुणायते ।
अपेयं सिन्धुपाथोऽपि मेघस्थं स्वादुतांगतम् ॥११
केऽपि केनापि भावेन तद्भक्तेरधिकारिणः ।
यदिचेदीश्वरे श्रद्धा शुद्धा हृदभिजायते ॥१२॥
जन्मभूमिर्मनोजस्य मनो यत्र स तिष्ठति ।
प्रतिरूपोयमस्यैव शृङ्गारः समुदाहृतः ॥१३॥

सावधानतया स्थेयं मनीषिभिरहो सदा।
दिव्यप्रेष्ठपदाम्भोजरसमाधुर्य्य-लोलुपैः ॥१४॥
परोक्ष इन्द्रियागम्ये ईश्वरे दुर्ल्लभा रतिः।
यदा प्रेयान् स देवेशः सर्वे भोगास्तदाप्रियाः॥१५
नेन्द्रियोऽहं न देहोऽहं भोगस्य किम्प्रयोजनम्।
तदीश्वरस्य शेषोऽहं चिद्रूपस्समलक्षणः ॥१६॥



इति श्रीमच्चक्रवर्त्तिचक्रचूडामणि श्रीमन्महाराजाधिराजेन्द्रकुमार श्रीलाल श्रीमदवधशरणनिर्म्मिते श्रीसख्यसिन्धुचन्द्रोदये पश्चिमालोकः।



चन्द्रामृतबिन्दु।

(दोहा।)

ज्यो०—सच्चिद ब्रह्मानन्दमैं नहीं अहै वैषम्य।
प्रगट्यो नाना रूपह्वै सख्य-ब्रह्म-रस रम्य ॥१॥
केवल पात्र-विभेदसे तारतम्य दिखरात।
रुचिके अति वैचित्र्य तैं भाव अनेक उगात ॥२॥
सत्यप्रेमवश दुर्ल्लभौ सुलभ होयहू जात।
होत सुसम्भवहू अहै जौन असम्भव बात ॥३॥
असत प्रेमहू तैसही विषयभोगको रूप।
सुलभौ दुर्ल्लभ करत है डारत कर्म्म-कुकूप ॥४॥

रस रहस्य है, हीयको विषय सुरम्य सुहाय।
प्रकट न कीजै जगतमें धरियै तहां जुगाय ॥५॥
अहै प्रेय-सुखतैंहि सुख तातैं स्वारथ-लाग।
ताके उज्ज्वल सुयशमें नाहिं लगाइय दाग ॥६॥
लोक-वेद-अनुकूल औ सम्प्रदाय-अनुसार।
सदाचार नित पालिए मर्य्यादाको धार ॥७॥
यहि सुसख्य-शास्त्रेन्दुके उदयकेर उद्देश।
करिबो तात्त्विक रीतिसे प्रगट मञ्जु रसवेश ॥८॥
भटकत-अटकत विषयवन मोहतमोमय-माहिं।
खोजत दिव्य रसामृत-सरवर जित-तित जाहिं ॥९॥
तिनको देइ प्रकाश निज सुपथ-दिखावन-काज।
सख्य-सिन्धुतैं उदित यह पूर्णचन्द द्विजराज ॥१०॥
लगन लगनतैं ईशमें दोषौ गुणसम होय।
मधुर होत है मेघमें खार सिन्धुको तोय ॥११॥
सबको सबही भावतैं भक्तिकेर अधिकार।
जौ हियमें हरिप्रति विमल हो श्रद्धा-सञ्चार ॥१२
मन मनसिजको जन्मथल, तहां रहत सो छाय।
ताहीको प्रतिरूप यह रस श्रृङ्गार सुहाय ॥१३॥
सावधान रहिबो उचित मतिमन्तन यहि हेतु।
दिव्य-प्रेय-पदकञ्ज-मधु-लोलुप मधुकर जेतु ॥१४॥
अगम इन्द्रियनतैं अदृश हरिमें दुर्लभ नेह।
जौ प्रिय लागैं देव सो, सबै भोग हो खेह ॥१५॥

नहिं इन्द्रिय, नहि देह हौं, काह भोगतैं काज।
शेष अहौं वहि ईशको चिद् समलक्षण भ्राज ॥१६

# अथ सख्योपनिषद्।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदंचते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥१॥ ॐ शान्तिः ३। ॐ क्वचित्समये सनकादयश्शेषं प्रति जग्मुः। कथंनु भगवन् पुरुषं वेदज्ञा भक्त्या पश्यन्ति प्राप्नुवन्ति तेन सह क्रीडन्ति। सहोवाच। सख्यरसेनैव २। श्रुत्वा पुनरूचुः। भगवन् क स रसः प्राकृतोऽप्राकृतो वा। सहोवाच। अप्राकृतः प्रकृतिपरश्च सख्यस्यैव बहूनि पर्य्यायनामानि सन्ति ३। विश्वासः श्रद्धा श्रद्धाविश्वासः प्रकृतिः। सत्यज्ञानमनन्तं ब्रह्म तद्ब्रह्म सख्यरसात्मकः। श्रीरामएवरसोवैसः।४।यस्यदासरसोवैपादः५।यस्य शान्तरसो वै शिरः।६। वात्सल्यःप्राणाः।७। शृङ्गारो बाहू।८। सख्यात्मा।९।सख्यरसाज्जायन्ते पर-व्यूहविभवान्तर्य्याम्यर्चावताराः। सख्यरसान्महाविष्णुर्जायते। सख्यरसान्महाब्रह्मा जायते। सख्यरसान्महारुद्रो जायते। सख्यरसात्परमात्मा जायते।

सख्यरसान्महालक्ष्मीर्जायते। सख्यरसान्महामाया जायते। सख्यरसादाद्याशक्तिर्जायते। सख्यरसात्सखा जायते। सख्यरसाद्वासुदेवो जायते। सख्यरसात्क्षीरशायी जायते। सख्यरसात्सर्वेश्वराः जायन्ते। सख्यरसात्सर्वेऽवताराः जायन्ते। सख्यरसान्नृसिंहो जायते। सख्यरसाद्वराहो जायते। सख्यरसान्मत्स्यकच्छपौ जायेते। सख्यरसात्कल्किबौद्धौ जायेते। सख्यरसाद्वामनो जायते। सख्यरसात्परशुरामो जायते। सख्यरसाच्छ्रीकृष्णो जायते। सख्यरसाद्बलरामो जायते। सख्यरसाद्विष्णुर्जायते। सख्यरसान्महादेवो जायते। सख्यरसाद्ब्रह्मा जायते। सख्यरसान्महेन्द्रो जायते। सख्यरसादिन्द्रो जायते। सख्यरसात्सर्वेदेवाः जायन्ते। सख्यरसात्सर्वाः शक्तयो जायन्ते। सख्यरसाच्छेषो जायते। सख्यरसाद्गणेशो जायते। सख्यरसाद्वरुणो जायते। सख्यरसात्सोमो जायते। सख्यरसादग्निर्जायते। सख्यरसात्सूर्यो जायते। सख्यरसाद्यमोजायते। सख्यरसात्कल्पवृक्षो जायते। सख्यरसात्कामो जायते। सख्यरसात्कामधेनुर्जायते।

सख्यरसाद्धनदोजायते । सख्यरसात्सर्वे मरुताः जायन्ते । सख्यरसात्सर्वे गन्धर्वाः जायन्ते। सख्यरसात्सर्वे विद्याधराः ज़ायन्ते। सख्यरसात्सर्वे वेदाः जायन्ते । सख्यरसात्सर्वोपनिषदो जायन्ते। सख्यरसात्सर्वे मन्त्राः जायन्ते। सख्यरसात्सर्वे सिद्धाः जायन्ते। सख्यरसात्पञ्च महाभूतानि जायन्ते। सख्यरसात्सर्वे जड्चेतनाःजायन्ते। अतो ब्रह्मवित्सर्वं स्त्रीपुन्नपुंसकात्मकं विश्वं सख्यात्मकं पश्यति। यस्मादितरन्नकिञ्चिदिति। नित्यभेदं। तित्योऽभेदो। नित्योऽभेदो। नित्योऽभेदो विवेचनीयोब्रह्मविद्भिः । हरि ॐ पूर्णमद इति शान्तिः। इत्यथर्वणवेदीयपिप्पलीय शाखायां सख्योपनिषद् समाप्ता।

सख्य श्रुतियोंका आशय यह है कि सम्पूर्ण सृष्टि, उसके उपकरण और शक्ति-सहित उसके अधिष्ठातृदेव सख्यरससेही उत्पन्न होते हैं। तो, ऐसे महत्त्वमय सख्यरस का क्या तत्त्व है, यह विचारणीय है । वह मैत्रीरूप है। विना प्रकृति और पुरुषकी मैत्री (संयोग) के सृष्टि हो नहीं सकती। जब पुरुषोत्तम भगवान् अपनी योगमायाका अङ्गीकार करते हैं (उससे उनकी मैत्री सङ्घटित होती है) तब

अनायास सृष्टि-परमाणुओंमें भी सख्यरसका सञ्चार हो उठता है और उसके प्रभावसे आकर्षण होने लगता है और फलतः देखते-देखते त्रिगुणात्मक एवम् पञ्चभूतात्मक इस विराट् जगत्का आविर्भाव होजाता है। प्रकृति और पुरुषके ऐक्यका तत्त्वही सख्यरस है अर्थात् जिस सनातन सिद्ध अवस्थामें वे (प्रकृति और पुरुष) दो नहीं रहते वही सख्यरसका परात्पर स्वरूप है । उसी अनादि-अलौकिक सख्यरसके, जो सृष्टिके पूर्व केवल पुरुषोत्तम एकमेवाद्वितीय रसब्रह्मके रूपमें स्थित था, दो भेद हुए——सख्य और शृङ्गार। वही पर-सख्यरस पुरुष-पुरुषमें प्रेयान्रस कहलाता है, जिसका उल्लेख रुद्रटाचार्य्यने अपने काव्यालङ्कारमें किया है। उसी प्रेयान्रसको सख्यरस कहते हैं। उसीके श्रद्धा, विश्वास आदि पर्य्याय-नाम हैं। स्त्री-पुरुषमें, रूपान्तरित होकर अर्थात् परिणामको प्राप्त होकर वही रस शृङ्गार कहलाता है, जैसा लोमशसंहितामें कहा है——"सख्यशृङ्गारयोरैक्यं तत्त्वतो विद्धि वै मुने।" अर्थात् तत्त्वतः सख्य और शृङ्गार एकही हैं ।

ब्रह्मकी जिस अवस्थाको "रसो वै सः" श्रुति कहती है वही सख्यरस है। अपितु शृङ्गाररसके उद्दीपन और आलम्बनका एकत्व जिसमें रहता है, विभावकी उस पूर्व अवस्थाकोही सख्यरस-नामसे वेद निर्देश करते हैं। स्पष्टतः यह कि जिस अवस्थामें रसको केवल रस कहते हैं उस (रस)की

यही शुद्ध अवस्था सख्यरस है। वही रस अन्तः अर्थात् मनोमयी एवम् वाङ्मयी सृष्टिमें और बाह्य अर्थात् चराचर जगत्में अनेक रूपोंमें परिणत हुआ। अतएव ब्रह्मविद् "सर्वं स्त्री-पुन्नपुंसकात्मकं विश्वं सख्यात्मकं पश्यति।" अर्थात् सम्पूर्ण जगत्को सख्यरूप देखते हैं। "तदितरन्न किञ्चिदिति।" उसके अतिरिक्त और कुछ भी नहीं है। "नित्यभेदं," "नित्योऽभेदो," नित्योऽभेदो," "नित्योऽभेदो विवेचनीयो ब्रह्मविद्भिः।" वही सख्यरस ब्रह्म भेदरूपमें भी है, और वही नित्य अभेदरूपमें भी। उसकी यह अलौकिकता है कि भेदाभेदकी दोनों अवस्थाएँ एक साथही उसमें सिद्ध हैं। यही तत्त्व, यही रस-रहस्य ब्रह्मविद् पुरुषोंके विवेचनका विषय है।



जब सृष्टिमें सख्यरस अन्तर्हित होगा तब परमाणुओं में विकर्षण उत्पन्न हो जायगा और जगत् रसब्रह्ममें अथवा सख्यरसमें लय होरहेगा। यही सख्य श्रुतियोंका तात्पर्य्य है।

उसी सख्यरसके आश्रयसे ब्रह्मविद् एवम् ब्रह्मनिष्ठ अर्थात् सख्यरसके ज्ञानात्मक और रसात्मक उभय रूपोंको अभेद भावसे जाननेवाले और उस तत्त्वको प्राप्त हो अभेद हुए महात्मा उस पुरुषोत्तमके साथ सखा होकर खेलते हैं। उनकी दृष्टिमें इस सम्पूर्ण विश्वके चराचर प्राणिमात्र उनके सखा और उनसे अभिन्न हैं और वे सबके सखा हैं, इस प्रकार वे विश्वामित्रपदको प्राप्त हैं।

श्रीसख्यसिन्धु-चन्द्रोदयः ।

# श्रीसीतारामार्पणमस्तु

जय सीतापति करुणाकन्द ।
जय-जय राम सच्चिदानन्द ॥